# स्तावस्तवकम्



ब्रह्मधाम, हस्तिशालं, पुरी (ओडिशा)

# स्तवस्तवकम्

*पण्डितश्रीलक्ष्मीधरद्विवेदी*
साहित्य–धर्मशास्त्र–पुराणाचार्य–वेदान्तशास्त्री




ब्रह्मधाम, हस्तिशालं, पुरी (ओडिशा)

# स्तवस्तवकम्

रचकः
पण्डितश्रीलक्ष्मीधरद्विवेदी
साहित्य-धर्मशास्त्र-पुराणाचार्य-वेदान्तशास्त्री
वलाङ्गिरस्थविद्याभूषणसंस्कृतमहाविद्यालयस्य वरिष्ठप्राध्यापकचरः

प्रकाशकम्
व्रह्मधाम, हस्तिशालं, पुरी (ओडिशा)
चलदूरभाषः - ९४३९४८७९४९

प्रकाशनकालः
१९३७तम शकाव्दीया (२०१५ खृ.)
श्रीगुण्डिचा-रथयात्रा

मुद्रणपरिमाणम्- १०००

वर्णविन्यासकः
श्रीदेवव्रतरथः, पुरी

मुद्रकः
एच्.पी. प्रिण्टर्स, क्लार्करोड, पुरी

मूल्यम्- ३०.०० (त्रिंशद्रूप्यकाणि)

आर्जवविग्रहाय निरभिमानाय शिष्यवत्सलाय
काव्यव्याकरणस्मृतितीर्थाय दिवंगताय पण्डितप्रवराय

## श्रीरामचन्द्रदाशशर्मणे

सभक्तिकं समर्पणम्

परमपूज्य गुरुदेव,

पद्यरचनायै भवदीयप्रेरणा कैशोरे वर्तमानस्यापि मे चेतसि दत्तपदाभूत्। तयैवाहं समुत्साहितो विविधविषयेषु पद्यगुम्फनाय प्रावर्तिषि। साम्प्रतं नानादेवभक्तियुतं ''स्तवस्तवक''मिदं भवत्पदारविन्दयोरर्पयामि ।

तृणसुममिव तुच्छं रूपगन्धादिहीनं
भवति यदि ममेदं कर्म लोके तथापि ।
तव चरणसरोजे भक्तियुक्तो ददेऽहं
गुरुवर! दयया त्वं स्वीकुरु प्रार्थयामि ।।

।। इति ।।

भवदीयश्चिरकृपापात्रं
लक्ष्मीधरः (धुलः)

# भूमिका

यस्य प्रसादमिच्छन्ति वासवाद्या दिवौकसः ।
तमनन्तं प्रपद्येऽहं जगन्नाथं जगद्गुरुम् ।।

'ष्टुञ् स्तुतौ' (अ.उ.अ.) धातोः अप्-ष्ट्रन्-क्तिन् प्रत्ययैः स्तव स्तोत्रं, स्तुतिरिति पदानि निष्पन्नानि एकार्थवाचकान्येव भवन्ति । "स्त स्तोत्रं स्तुतिर्नुति'रित्यमरकोषात् (१/६/११) । 'प्रगीतमन्त्रसाध्या स्तु स्तोत्र'मिति मीमांसका आमनन्ति । अर्थात् यासामृचां सामगानं भवति एव स्तोत्रपदवाच्याः । लौकिकच्छन्दसा विरचितानि देवानां प्रशंसात्मक वाक्यान्यपि स्तोत्राण्युच्यन्ते । मान्यो यामुनाचार्यः 'स्तोतव्यनिष्ठगुणप्रकर्षा धानं स्तुति'रित्याह ।

वेदस्य प्रथममन्त्रे गायत्रीछन्दोवद्धे 'अग्निमीळे पुरोहित'मित् स्तुत्यर्थकस्येड् धातोः 'ईळे' इति प्रयोगः स्तोत्रस्य प्रत्नत्वं महत्त्वं च ख्यापय प्रथमत अपौरुषेय-पौरुषेयभेदेन स्तोत्रं द्विधा विभक्तम् । अपौरुषेयं वैदि सूक्तादि । पौरुषेयमपि आर्षानार्षभेदेनापि विभक्तम् । आर्षं (ऋषिप्रोक्त यथा-

'यः सर्वलोकमयमात्मवपुर्विधत्ते
स्तुत्या दलेन सलिलेन च भूरितुष्टः ।
पूर्णं ददात्यभिमतं सततं भजद्भ्य-
स्तस्मै नमो भगवते गिरिशाय तुभ्यम् ।।
(मृकुण्डकृतशिवस्तोत्र

अनार्षाणि पण्डितराजजगन्नाथादिभिः कृतानि । यथा-

विशालाभ्यामाभ्यां किमिह नयननयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः ।। इत्यादि ।
(पण्डितराजजगन्नाथकृत गङ्गालह

स्तुत्या देवाः प्रसीदन्तीति नात्र संशीतिः । सा दिव्या (संस्कृता) अदिव्या (प्राकृता, देशभाषामयी) वा स्यात् । यथा अन्यभाषापेक्षया स्वभाषा जनेभ्योऽधिकतरं रोचते तथा देवेभ्योऽपि संस्कृतम् । ते दिव्यभाषामयेन स्तवेनाधिकं प्रसीदन्ति । को वा भारतीय आस्तिको न वेत्ति चण्डी (दुर्गासप्तशती) पाठस्य प्रभावं माहात्म्यञ्च ? वाद्यं यथा गीतस्य माधुर्यं समेधयति स्तवोऽति तथा भक्तिभावं वर्द्धयति ।

स्तोत्रसाहित्यं समृद्धम् । पुष्पदन्तकृतं शिवमहिम्नः स्तोत्रं प्राचीनतमं पौरुषेयेषु स्तोत्रेषु । यस्योपरि पूज्यमधुसूदनसरस्वतीस्वामिनः शिवविष्णुपरकं व्याख्यानमतीवोपादेयम् । काश्मीरीयस्य जगद्धरस्य 'स्तुतिकुसुमाञ्जलिः' समुज्ज्वलं रत्नकल्पं वाणीभण्डारे ।

रूपसौरभरहितान्यपि धुस्तूरादीनि पुष्पाणि विकशन्ति तान्यपि भगवतो भूतभावनस्य भवानीवल्लभस्य प्रियाणि भवन्ति । चम्पकमल्लिकागोलापादीनि विकशयेयुर्न तगरादीनीति नास्ति नियमः । पाण्डित्यप्रकर्षाभावेऽपि मया विभिन्नसमयेषु विविधछन्दोभिः रचिता स्तवाः सम्प्रति 'स्तवस्तवक' नाम्ना प्रकाश्यन्ते । यदि कस्यापि चेतसि किंञ्चिन्मात्रमानन्दं सृजेदतेत् तदेव मे प्रकाममिति ।

विनीतो
लक्ष्मीधरद्विवेदी

# सूचीपत्रम्





# स्तव-स्तवकम्

## देव्याः स्तोत्रम्

हे चण्डमुण्डभयहारिणि देवि दुर्गे
मातस्त्वमेव शरणं विषमे भवाब्धौ ।
न त्वां विना हरिहरावथवामरोऽन्यः
शक्तोऽस्ति मे खलु विपत्परिरक्षणार्थम् ।।१

नैवार्चितं प्रतिदिनं तव पादपद्मं
नामापि कल्मसहरं न कृतं मुखे मे ।
त्वन्मन्त्रसाधनविधौ विहितो न यत्नः
कष्टं हहा किमिह मे खलु जीवितेन ।।२

विश्वस्य देवि जननी करुणामयी त्वं
श्रुत्वा सुधीगणमुखात्समुपैमि तस्मात् ।
कामादिशत्रुनिवहैर्नितरां हि खिन्नं
पुत्रस्त्वदीय इति मां परिपाहि तूर्णम् ।।३

नास्ति क्वचिन्मम समो जगतीह पापी
पापापहा तव तुला नहि काचिदन्या ।
सन्धार्य चेतसि दयस्व दयामयि त्वं
नो चेन्ममात्र विलयः खलु पापपङ्के ।।४

सांसारिकेषु विषयेषु सदैव मग्नः
स्वप्नेऽपि त्वत्पदयुगं नहि चिन्तयामि ।
सत्यं तव स्मृतिरियं परिरक्षणार्थं
दुष्पारघोरविपदः परिपाहि तस्मात् ।।५

क्रीडाप्रलुब्धमनसां भुवि बालकानां
क्षुत्पीडनेन जननी स्मरणं ह्युपैति ।

इत्थं विभाव्य कृपया मम दुःखजातं
विध्वंसयायि करुणावरुणालये त्वम् ।।६
षट्चक्रभेदनिपुणा विरला महान्त-
स्त्यक्त्वैषणात्रयमरण्यकृताधिवासाः ।
वद्ध्वासनं हृदि सदा गलितान्धकारे
त्वत्पाददर्शनविधौ प्रभवन्ति सन्तः ।।७
त्वं क्वासि देवि सुरसिद्ध-मुनीन्द्रवन्द्या
क्वाहं नितान्तकलुषापहतोऽतिमूढः ।
मातस्तथापि करुणाकणया तवाहं
सन्दर्शनाय चरणौ प्रभवेयमङ्ग ।।८ ?
श्रीलक्ष्मीधरसूरिणा विरचितं स्तोत्रं भवान्याः प्रियं
सन्ध्यायां सुसमाहितेन मनसा चाध्येति यो मानवः ।
लब्ध्वास्यां भुवि कीर्तिमप्रतिहतां स्वर्गेऽप्सरोभिः समं
नित्यं नन्दति नन्दने स हि पुनर्देव्याः प्रसादाच्चिरम् ।।९

—*—

# गणेशस्तोत्रम्

हे विघ्ननाशन ! विनाशय दुःखजातं
मूढे मनाङ्मयि निधेहि कृपाकटाक्षम् ।
लम्बोदर त्वदपरो न ममावलम्बो
भक्तार्तिनाशनपरस्त्वमसीह लोके ।।१।
मन्दाकिनीकनकपङ्कजरेणुगन्धै-
रर्घ्यं जलैः शिरसि ते त्रिदशा ददन्ते ।
देवेन्द्रमौलिपरिशोभितपारिजात-
स्रग्भिस्तवाङ्घ्रियुगलं भजतेऽरुणत्वम् ।।२

यस्ते पदाब्जयुगलं परया च भक्त्या
ध्यात्वा स्वचेतसि नतिं विदधाति विज्ञः ।
सम्प्राप्य भोगमखिलं लभतेऽपवर्गं
तस्याशु विघ्ननिवहा विलयं प्रयान्ति ।।३।।
नागेन्द्रसुन्दरमुखं नरगात्रयुक्तं
रूपं च येऽतिरुचिरं परिचिन्तयन्तः ।
उच्चारयन्ति वदने तव नाम नित्यं
भक्ता हि ते गणपते प्रभवन्ति मुक्त्यै ।।४।।
यं वीक्ष्य लुब्धहृदया तुलसी पुराभूद्
भावं न्यवेदयदनङ्गशराभिभूता ।
स्वीकृत्य शापमपि यो विजहौ यतीन्द्र-
स्तां काममग्नहृदयां विजने स पायात् ।।५।।
वाञ्छास्ति मे न विपुले विभवे न राज्ये
विद्यासु वामरपुरेऽप्सरसां गणेषु ।
काङ्क्षे न मोक्षमपि केवलमेकदन्त
त्वत्पादपद्ममधुपोऽस्तु मनोमदीयम् ।।६।।
सेवा गुरोर्न विहिता नहि चाग्निहोत्रं
सम्पादितं विधिवशात्तपसः कथा का ?
भोगातिलोलहृदयेन मया सुराणां
पूजा कृता नहि विभो शरणं ततस्त्वम् ।।७।।
मत्तःपरं भुवि भविष्यति नार्तिपात्रं
नाभून्नवा भवति कोऽपि गणाधिनाथ ।
कारुण्यसिन्धुपतिरस्ति समो न तेऽन्य-
स्तस्मात्कृपाञ्चितदृशा प्रणतं प्रपश्य ।।८।।

हे नागानन हेऽखिलामरगुरो हे सिद्धिबुद्धिप्रद
हे पुष्टिप्रणयिन् गिरीन्द्रतनयानन्दप्रदातः प्रभो ।
हे भक्तप्रिय हे महेशसुत हे कारुण्यवारांनिधे !
मग्नं दुःखपयोनिधावविरतं मां पाहि देवाचिरात् ।।९।।

कुलमणितनयः श्रीरामचन्द्रस्य शिष्यः
स्मरहरसुतभृत्यो विप्रलक्ष्मीधराख्यः ।
गणपतिपदयुग्मे स्तोत्रमेतद्विधाय
प्रमुदितमनसा तद्भक्तिलब्ध्यै ददाति ।।१०।।

—*—

# शिवस्तोत्रम्

केचिद्धरिं गणपतिं द्युमणिं पराम्बां
ध्यायन्ति चेतसि सदा भवभीत्युपेताः ।
चेतो मदीयमपहाय तवाङ्घ्रियुग्मं
कुत्रापि नो व्रजति शङ्कर सत्यमेतत् ।।१

सृष्टौ दधासि जगतां परमेष्ठिरूपं
स्वीकृत्य वैष्णवतनुं परिपासि भूयः ।
रुद्रस्त्वमेव विलये प्रणतार्तिनाशिं-
ल्लीला तवेयमतिचित्रकरीति मन्ये ।।२

लब्ध्वापि मानवतनुं बहुभाग्ययोगात्
तत्राधिगम्य निखिलागमतत्त्वसारम् ।
पञ्चाक्षरं मनुवरं नहि ये भजन्ते
तेषां वृथा जननमत्र महेश सत्यम् ।।३

त्राता त्वमेव निखिलार्तिनिपीडितानां
तापत्रयेण नितरां परिपीडितोऽहम् ।

त्वामन्तरेण नहि कोऽपि ममावलम्बः
स्तोकं कृपा भवतु तन्मयि मन्दबुद्धौ ।।४
विज्ञापयामि किमहं करुणैकसिन्धो
जानासि किं न मम दुःसहदुःखजातम् ।
प्राप्तस्तवान्तिकमहं कुरु मा विलम्बं
क्षिप्रं विनाशय विभो भवरोगपीडाम् ।।५
यो भक्तदुःखमविषह्य रणाङ्गने प्रा-
गाविर्बभूव भगवान् सगणोऽवनाय ।
एकात्मनापि युयुधे सह शौरिणा वै
तं भक्तवत्सलमहं शरणं प्रपद्ये ।।६
मन्दाकिनी शिरसि यस्य च चन्द्ररेखा
कण्ठे सुदुःसहतरं गरलं तथाहिः ।
अङ्के गिरीन्द्रतनयाथ करे कपालं
तं चित्रवेशरचनाधरमीशमीडे ।।७
शैलाधिराजतनयाहृदयाब्जभानो
हे कामपामरपतङ्गमहाकृशानो !
हे भक्तकैरवविकाशिसुधाकराशु
त्रायस्व मां भवभयात्कुरु मा विलम्वम् ।।८
धनदमित्र विमुक्तिकर प्रभो
तव नुतिं नहि कर्त्तुमहं क्षमः ।
शमनतापविनाशन पाहि मां
करुणया कुरु बन्धविमोचनम् ।।९

शम्भो शङ्कर चन्द्रशेखर हर श्रीपार्वतीवल्लभ
कैलासाधिपते श्मशाननिलय त्रैलोक्यनाथ प्रभो ।

कामारे कमलापतिप्रिय शिव श्रीकण्ठगङ्गाधर
चण्डीश त्रिपुरान्तक त्रिनयन त्रायस्व मां सत्वरम् ।।१०
शम्भोः पदाम्भोरुहकिङ्करश्रीलक्ष्मीधरेण व्यरचि स्तवो यः।
तं देवदेवस्य मुदे पठन्तः सौभाग्यमायुश्च चिरं लभन्ते ।।११

—*—

# शिवभुजङ्गप्रयातस्तोत्रम्

महादेव शम्भो शशाङ्कार्द्धमौले
महाकाल विश्वेश्वरानङ्गनाशिन् ।
शिवेशान शूलिन्नुमाकान्त भर्ग
त्वमेकः शरण्यो भवाब्धौ ममासि ।।१
त्वमर्कः शशाङ्कोऽनलः खं धरित्री
जलं वायुरात्मेति विज्ञा वदन्ति ।
परं नासि किन्त्वं न शक्नोमि वेत्तुं
क्रिया कारकं वा फलं विश्वरूप ।।२
न भक्तिर्न योगो न च ज्ञानलेशः
क्व वा कर्मकाण्डे गतिर्मे भवेश ।
न दानं न तीर्थाटनं वापि किञ्चित्
ततोऽहं प्रपद्येऽतिदीनस्तवाङ्घ्रिम् ।।३
न पश्यामि तुल्यं त्वयान्यं भवे यः
कृपालुः क्षमासागरो लोकनाथ ।
स्वभक्तार्तिनाशी हर क्षेमकारी
कृथा मा विलम्बं प्रसीदाशुतोष ।।४
भवे नो भवेन्मादृशः पापकारी
न वा त्वादृशः पापतापापहारी ।

विना त्वां ममास्ति न कश्चिद्धि पाता
प्रपञ्चात्त्वदन्यो न मुक्तिप्रदाता ।।५

त्वदीयं स्मरेयं मनोहारि रूपं
जपेयं सदा नाम ते देवदेव ।
सुखे वास्तु दुःखे न ते विस्मृतिः स्या-
दिति प्रार्थये त्वां विनम्रः कृपालो ।।६

प्रकामं हिरण्यं सुरूपं कलत्रं
विनीतान्सुतान् कीर्तिमाशान्तगां वा ।
न याचेऽहमन्यद्विना ते पदाब्जं
दयस्वान्धकारेऽधमेऽस्मिन्नतोऽहम् ।।७

अये विश्वनाथ प्रभो पञ्चवक्त्र
प्रजाभीलनाशिन् गिरीन्द्राधिवासिन् ।
त्वदीयोऽस्मि भृत्याधमोऽहं स्मरारे
भवत्रासतो मां प्रपाहि प्रसीद ।।८

पठेद्यः प्रभातेऽन्वहं भक्तियुक्तः
स भोगान्हि भुक्त्वा लभेतापवर्गम् ।
न बाधा न विघ्नो भवेदत्र कश्चि-
च्छिवस्य प्रसादाज्जयस्तस्य नित्यम् ।।९

उषित्वा तटिन्याः सुराणां तटेऽयं
स्मरारातिपुर्य्यामिमां शब्दपुष्पैः ।
ग्रथित्वा सुमालां शिवायार्पयित्वा
प्रमोदे प्रकामञ्च लक्ष्मीधरोऽहम् ।।१०

इति शिवभुजङ्गप्रयातस्तोत्रं सम्पूर्णम् ।

—*—

# नारायणस्तोत्रम्

कारुण्यसागरपते करुणाकणाया
नाशो भवेदिति धिया कृपणोऽसि जातः ।
हा हन्त हन्त पुरतः कथयामि कस्य
लज्जा नु किं न भविता भवतोऽत्र लोके ।।१

नक्रस्त्वया विनिहतो गजरक्षणार्थं
चक्रं निरस्य भगवन् श्रितनैजधाम्ना ।
शक्रस्य दर्पगिरिचूर्णनवज्रकल्प
वक्रो नु किं भवसि मे कुविधिं विलोक्य ।।२

नारायणः प्रवलकल्मपनाशकारी-
त्याहुर्बुधाः श्रुतिपथं गतमेतदेव ।
ध्यातं तथापि न मया तव दिव्यरूपं
नो श्रद्धयापि च मनुस्मरणं कृतं वा ।।३।।

भक्त्या कदापि न मया प्रणतं त्वदग्रे
दूरेऽस्तु पूजनविधिर्मयि पुण्यहीने ।
किञ्चित्कृपाञ्चितदृशा कुरु दृष्टिपातं
पापानि मे विलयतामयतां मुरारे ।।४।।

लोकेश-शेष-विबुधेश-गिरीशमुख्याः
स्तुत्यार्च्चयन्ति न तु तेऽपि विदन्ति तत्त्वम्
को नाम मर्त्य इह वा तव दिव्यभावं
वेत्तुं क्षमेत भगवन् करुणां विना ते ।।५।।

नीलोत्पलाभकमनीयशरीरकान्तिं
फुल्लाब्जनिन्दिवदनं वरकुण्डलाढ्यम् ।

गन्धोर्द्ध्वपुण्ड्रतिलकाञ्चितभालदेशं
सन्दर्शय प्रणतपाल कृपावशात्ते ।।६।।

ख्यातं ह्यजामिलमलानि तवाभिधाया
उच्चारणेन नवरं विलयं गतानि ।
तेन स्मृतः स्वतनयो न भवांस्तु भक्त्या
वृत्तान्त एष भगवन् वितथो नु किंस्वित् ?।।७।।

सत्यं यदीदमघहन् प्रजपाम्यजस्रं
नामानि ते नहि तथापि च दिव्यधाम्नः ।
सन्दर्शनाय किमिति प्रभवामि योग्यः
शक्नोमि कारणमहं न विचिन्त्य वेत्तुम् ।।८।।

स्यादिच्छया यदि जगद्भवतः प्रकृत्या
सृष्टं हरे मम मनोऽपि भवेत्तथैव ।
तेनैव मन्दसरणीमनुवर्तमानः
क्लिश्येऽपराध इह कस्य वद प्रभो भोः ।।९।।

यद्वास्तु सम्प्रति दयस्व मयि प्रभो हे
धर्म्ये पथि प्रचलतात्सततं मनो मे ।
तस्मादपैतु सकलो विषयाभिलाष-
स्त्वत्पादपद्मयुगलं स्मरताद्विमुक्त्यै ।।१०।।

कुलमणितनुजन्मानिन्दिताशेषकर्मा-
विदितनिखिलधर्मा श्रीहरेर्नामवर्मा ।
सकलकलुषहारि श्रीपतिप्रीतिकरि
भवभयहरमाशु स्तोत्रमेतद्व्यधत्त ।।११।।

—*—

# सूर्य्यस्तोत्रम्

त्रैलोक्यपूज्यचरणोऽप्युपतिष्ठते यं
बद्धाञ्जलिः प्रतिदिनं त्रिपुरान्तकोऽसौ ।
कुष्ठादिरोगशमनाय तमोऽपहन्त्रे
तस्मै नमोऽस्त्वखिलभावुककारणाय ।।१

यन्मण्डलं श्रुतिनुतं नियतं पवित्रं
लोकान्प्रकाशयति धामभिरात्मजातैः ।
योगेन यान्ति मुनयः प्रविभिद्य यद्वै
मुक्त्वा स्वदेहममृतं तमहं नतोऽस्मि ।।२

यस्योदयेन जगति श्रुतिशास्त्रनिष्ठाः
सम्पादयन्ति यजनानि सदा प्रसन्नाः ।
पाशाद्विमुक्तपशवश्चरितुं तृणानि
प्रस्थाय मोदमतुलं नियतं लभन्ते ।।३

यत्तीग्मदीप्त्यभिभवात्कपटेन संज्ञा
छायां निधाय वडवा विपिने वभूव ।
कष्टं स्वकीयमवमत्य विकर्त्तनो यो
ज्ञात्वा प्रियार्थमभवच्छरणं ममासौ ।।४

स्तुत्वा यमेव समरे प्रभुरामचन्द्रः
पार्थश्च शेकतुररातिगणं विजेतुम् ।
उत्तप्तहेमसदृशच्छविरेष सूर्यो
भूयाच्छिवाय सततं जगतोऽखिलस्य ।।५

शक्राजितस्य तपसा नभसोऽवतीर्य्य
योऽदर्शयन्निजवरेण्यतमं स्वरूपम् ।

दत्त्वा स्यमन्तकमणिं वरकण्ठभूषां
मर्त्येन सार्द्धमपि तेन चकार मैत्रीम् ।।६
शाम्बश्च कृष्णतनयोऽधिगताभिशापो
वैमात्रकोपवशतो निपपात कुष्ठे ।
सद्योगदाद्विरहितोऽपचितिं विधाय
यस्यैव तं भयहरं प्रणमामि सूर्यम् ।।७
प्रातर्दधासि भगवन् परमेष्ठिरूपं
मध्येऽहनि स्वयमहो गरुडध्वजस्त्वम् ।
सायं महेशवपुषा तपसि त्रिमूर्त्ति-
स्तेनोच्यसे मनुज-दानव-देवसङ्घैः ।।८
रक्ताम्बरं त्रिनयनं रमणीयगात्रं
रात्रिञ्चरारतिकरञ्च रथाङ्गमित्रम् ।
राजीवहस्तमवितारमशेषविश्वं
रत्नांशुजालजटिलं रविमानतोऽस्मि ।।९
हृदयकमलमध्ये सूर्यमाराध्य नित्यं
यदि पठति मनुष्यः प्राञ्जलिर्नान्यचेताः ।
कुलमणितनयेन स्तोत्रमेतत्प्रणीतं
भवति विभवयुक्तो रोगहीनश्च नित्यम् ।।१०

—*—

सिद्धिं बुद्धिं प्रदद्याद्गणपतिरखिलां घोरविघ्नौघघाती
पूषा पुष्टिप्रदाता सकलसुरनुतः स्वस्थतां नस्तनोतु ।
विष्णुर्जिष्णुं विदध्यात्सततमिह महादुर्गमात्त्रातु दुर्गा
भक्ताभीष्टप्रदोऽसौ निखिलभयहरः शङ्करः शङ्करोतु ।।

# श्रीरामस्तोत्रम्

यं नैकपेयपरिपीडितदेववृन्दं नीत्वा पुरा सरसिजासन आजुहाव ।
क्षीराब्धिमध्यशयमीश्वरमादिदेवं पायात्समां दशरथात्मजरूपधारी ।।१
पापानि यान्ति विलयं यदीयाभिधानान्निः श्रेयसं समधिगच्छति चापि लोकः
दृष्ट्वातिसुन्दरतरां तनुमाशु चक्रे रामेति नाम विधिजोऽवतु यस्य सोऽस्मान्।।
दिव्यास्त्रजातमधिगत्य हि कौशिकात्प्राग् विद्यां बलामतिबलां च परैर्दुरापाम्
संरक्ष्य यागमबलां पदपांशुपाताद् योऽपावयत्स दुरितानि जरीहरीतु ।।३
भङ्क्त्वा धनुर्विषमलोचनदत्तमाशु प्राणाशयज्जनकहृच्छयमम्बुजाक्षः।
जग्राह मैथिलीमथो विधिवत्प्रदत्तां यो नौमि तं भृगुजदर्पहरं सुवीरम् ।।४
त्यक्त्वा स्रजं सुमलिनामिव राजलक्ष्मीं सौमित्रिणा वनमगात्सह सीतया यः
पित्राज्ञया मनसि यस्य च दुःखलेशो नाभूज्जटी मम गतिः स सदास्तु रामः।।
आगस्विनो [1]वृषसुतस्य ररक्ष जीवं हत्वेषुणैकनयनं विपिनान्तरे यः।
यस्य व्रतं शरणरक्षणमस्ति गाढं पायात्स मां रिपुगणाभिभूतं दयालुः ।।
पत्न्येरितः कनकचीनमवाप्तुकामो दूरंगतो न बुबुधेऽसुरराजचेष्टाम्।
योऽन्विष्य वानरपतेरवगत्य वृत्तं सेतुं व्यधाज्जलनिधौ शरणं ममासौ।।
शत्रोः सहोदरमहो शरणागतं योऽरक्षीद्दयालुरवमत्य सुहृद्वचांसि ।
हत्वा च रावणमदात्प्रणताय तस्मै लङ्कां सुवर्णनगरीं दयतामसौ मे।।८
यः पुष्पकेण समुपेत्य पुरीमयोध्यां पौरान्मुदम्बुनिधिमग्नहृदो विधाय।
आलिङ्ग्य गाढमुरसा भरतं ववन्दे मातृश्च वन्द्यचरितस्तमहं प्रपद्ये ।।९
सिंहासनं समधिगत्य जनापवादात्सीतां प्रियामपि वने गहनेऽत्यजद्यः।
धर्म्यात्पथो विचलितं विनिपात्य शूद्रं सत्येन लक्ष्मणमहो विजहौ स वन्द्यः ।।१
शास्तुर्न जीवनमहो निजसौख्यहेतोस्तुष्ट्यै सदा जनगणस्य भवेद्धि सत्यम्
आदर्शमेतमतुलं परिशिक्षयन् योऽत्याक्षीत्तनुं मनुजरूपधरोऽवतान्नः ।।१

यज्ञं च दानमथवोग्रतपो विना द्राक् यन्नामकीर्तनबलेन जना अघानाम्।
राशीन् विधूय परमं पदमाश्रयन्ते तं भक्तवत्सलविभुं सततं भजेऽहम्।।१२

आपन्निवारणपरः सकलार्थदायी कारुण्यपूर्णहृदयो भवशंविधायी ।
पित्राज्ञया गहनकाननमध्ययायी भूयात्सदा स मम हृत्सरसीजशायी।।१३

युद्धे सुदक्षं कृतयज्ञरक्षं भग्नेशचापं हृतभक्ततापम् ।
कृताब्धिसेतुं रघुवंशकेतुं नमामि रामं वपुषाभिरामम् ।।१४

श्रीरामचन्द्रस्य गुणानुवादं स्तोत्रं तदीयं यदि भक्तियुक्तः ।
पठेन्मनुष्यो भुवि सौख्यमाप्त्वा लभेत मुक्तिं शरीरस्य पाते ।।१५

सुरस्रवन्तीतटभूमिभागे काश्यां वसन्नुत्कलदेशजातः ।
श्रीसुन्दरीगर्भजनिर्विनीतो लक्ष्मीधरः स्तोत्रमिदं व्यधत्त ।।१६

१. वृषसुतस्य = इन्द्रपुत्रस्य, जयन्तस्येत्यर्थः ।

—*—

# श्रीकृष्णस्तोत्रम्

यन्नामकीर्त्तनमशेषमघं धुनोति
यद्रूपचिन्तनमपारवृषं तनोति ।
यत्कीर्तिवर्णनमपाकुरुतेऽन्तरायान्
पायात्स मां स्मितमुखः शिखिपुच्छचूडः ।।१।।

मायामयं जगदिदं विरचय्य योऽन्तः
स्थित्वान्तरेऽस्य च बहिः स्वयमेव देवः ।
संक्रीडते शिशुरिवामितशक्तियोगात्
तं ज्ञानरूपममलं परिचिन्तयामि ।।२।।

कंसादिभिः प्रवलतामसभावयुक्तैः
सम्पीडितां वसुमतीं परिवीक्ष्य देवाः ।

ब्रह्मादयो नुतिमतन्वत यत्समीपे
सोऽव्यान्नवीनमुदिरच्छविरप्रमेयः ॥३॥

कारागृहे मनुजवज्जनिमाप योऽजो
लीलां विधातुमिह भक्तिवशः परेशः ।
त्रस्तौ विलोक्य पितरौ निजदिव्यरूपं
सन्दर्श्य बोधयति पातु पुरा स शश्वत् ॥४॥

यः सूतिकागृहगतोऽपि लघुः शिशुः स–
न्नत्युत्कटेन गरलेन विलिप्तमद्धा ।
पीत्वा स्तनं समपिवच्च तदीयजीवं
वक्याः स मे सकलदुःखमपाकरोतु ॥५॥

सञ्चाल्य पादमभनक् शकटं पुरा यो
रिङ्गंश्च जानुयुगलेन महीरुहौ वै ।
अन्यांश्च धेनुकमुखानवलीलयापि
बाल्येऽवतादविरतं भवभीतितो माम् ॥६॥

यो मातरं दधिविलोडनकर्मसक्तां
मह्यं प्रयच्छ नवनीतमयेऽधुनाम्ब ।
क्षुत्पीडितोऽस्मि नितरां नु कदा ददासी
त्युक्त्वारुरोदिपदसाववतादघारिः ॥७॥

भुञ्जानमर्भकगणेन समं वनान्ते
दृष्ट्वान्नमाशु कमलासन आमुमोह ।
हत्वा च वल्लवसुतैः सह वत्सवृन्दं
यस्मात्क्षमामलभतास्तु हरिर्गतिर्मे ॥८॥

यः कालियं विषधरं परिमर्द्य पद्भ्यां
प्रादात्तदीयनुतिभिः स्वपदाब्जचिह्नम् ।

तन्मस्तकेषु गरुडो यदवेक्ष्य वैरं
तत्याज सोऽन्तकभयान्मम रक्षकोऽस्तु ॥९॥

दावाग्निमध्यपतितान् पशुपालवालान्
वत्सांश्च यः समवलोक्य दयार्द्रचेताः ।
व्यादाय वक्त्रमपिवत्सकलं कृशानुं
पाति स्म तांश्च भवताच्छरणं ममासौ ॥१०॥

वृन्दावनेऽतिसरलैः पशुपालवालै-
र्यः क्रीडति स्म यमुनातटभूमिभागे ।
देवेन्द्रवन्दितपदोऽपि पितामहाद्यैः
सम्पूजितोऽपि स ममास्तु सदा सहायः ॥११॥

प्रत्यग्रवारिदरुचं स्मितचारुवक्त्रं
कस्तूरिकातिलकलाञ्छितभालपट्टम् ।
मायूरपुच्छपरिशोभितशीर्षदेशं
वंशीस्वनं सुमधुरं विदधानमीडे ॥१२॥

वृन्दावनेऽतिगहने धृतचारुवेणु-
र्गाश्चारयन्प्रतिनिवर्त्तत एव सायम् ।
यो वल्लवार्भकगणैरनुगम्यमानो
वत्सैश्च धेनुभिरसौ शरणं ममास्तु ॥१३॥

गोपालवालकगणैः परिवेष्टितं तं
नक्षत्रमण्डलगतक्षणदेशतुल्यम् ।
लोलालकं नयनकोणनिरीक्ष्यमाणं
गोपाङ्गनाभिरनिशं शरणं प्रपद्ये ॥१४॥

मन्दानिलेन परिकम्पितमल्पमल्पं
यच्चारुचन्द्रकमहो शिरसि प्रकामम् ।

निर्वर्ण्य मुग्धहृदयाः किमु गोपबाला
योगीन्द्रवृन्दमपि याति हि मुग्धभावम् ।।१५।।

वंशीस्वनः सुमधुरः श्रवसि प्रविश्य
सद्यो विनाशयति कल्मषराशिमाशु ।
चेतश्च कर्षति सदा निजपादपद्मं
यस्यैव तं भयहरं प्रणतोऽस्मि कृष्णम् ।।१६।।

क्रुद्धेन्द्रवृष्टिपरिपीडितगोकुलं योऽ-
रक्षीत्स्वसव्यभुजभव्यकनिष्ठिकाग्रे ।
गोवर्द्धनं गिरिवरं किमुतातपत्रं
सन्धारयन्नवतु मां स सदा मुकुन्दः ।।१७।।

नन्दं प्रविष्टमुपलभ्य जले निशायां
नीत्वा रसातलमगाद्वरुणस्य भृत्यः ।
विज्ञाय पाशिसदनात्पितरं विमोच्या-
यातं नमामि भवपाश-विमुक्तिहेतोः ।।१८।।

चाणूरकंसविनिपातनलब्धवर्णो
युद्धात्पलाय्य यवनं छलतोऽहनद्यः ।
रूपं प्रदर्श्य मुचुकुन्दनृपाय प्रादात्
स्वर्गं स मे शरणमस्तु सदा मुकुन्दः ।।१९।।

यो रुक्मिणीं भुजबलेन जहार तूर्णं
युद्धे समस्तनृपतीन्प्रसभं विजित्य ।
गोमायुमण्डलगतं निजयोग्यमांसं
सिंहो यथा स विपदोऽवतु मां मुरारिः ।।२०।।

दीनाद्द्विजात्समनुवाप्य पुरा सुदाम्न-
स्तद्वारदत्तपृथुकं किल मुष्टिमात्रम् ।

भुक्त्वा सुधोपममदात्सुदुरापमन्यै
रायं स मे सकलभूतसुहृच्छरण्यः ।।२१।।

अक्षेण पाण्डवबधूर्विजिता सभायां
दुःशासनेन चिकुरेषु हि कृष्यमाणा ।
वासांस्यवाप विपुलानि समाह्वयन्ती
यं नौमि तं शरणरक्षणमम्बुजाक्षम् ।।२२।।

युद्धे विलोक्य सकलान्निजवंशलोकान्
बन्धूंश्च मोहवशतः परितप्यमानम् ।
स्मित्वार्जुनं विमलतत्त्वमवोधयद्य-
स्तं पार्थसारथिमहं शरणं प्रपद्ये ।।२३।।

पृथ्वीभरं निजकुलं समवेक्ष्य मायी
प्राणाशयन्मदिरया समरं विधाय ।
शापं द्विजस्य सफलं फलकेन पादे
संबेध्य योऽकृत स मेऽस्तु सदा प्रसन्नः ।।२४।।

हे नन्दनन्दन तवैव पदारविन्दं
विन्दानि किं वद कदा निकृतिं न कृत्वा ।
सन्दानितोऽस्मि सततं दृढकर्मपाशै-
श्छिन्ध्याशु तन्मम मनाक् करुणाकटाक्षैः ।।२५।।

दुष्टा हया इव वनं विषयान्भृशं हा-
कर्षन्ति मामविरतं करणानि देव ।
गाढं प्रमाथि बलवच्चपलं च चित्तं
किं साधनं वद विभो प्रकरोमि केन ।।२६।।

पुत्राः कलत्रमितरे सुहृदः समस्ता
ये सन्ति तेषु नहि कोऽपि विना त्वया मे ।

प्राणप्रयाणसमये भवितोपकारी
जाने दृढं परमहो न भजे भवन्तम् ।।२७।।

नैर्घृण्यमस्ति न तवेति वदन्ति वेदा
अज्ञानहेतुकमिदं भवबन्धनं यत् ।
कस्मात्तदीयप्रभवो वद विश्वबन्धो
तन्नाशमाशु कुरु भोः करुणां प्रकाश्य ।।२८।।

लीला हहा कथमियं क्रियते त्वया वा
त्वं पूर्णकाम इति तत्त्वविदो वदन्ति ।
क्लिश्यन्ति किं नहि विभो क्रिययानया ते
जीवा भृशं वद मनाक्सुविचार्य चित्ते ।।२९।।

तस्मात्करोतु करुणां करुणाम्वुराशे
जीवेपु सन्तु सकलास्तव भक्तियुक्ताः ।
आराधयन्तु हृदये सततं भवन्तं
लोके भवन्तु सुखिनोऽनुमतात्त्वदीयात् ।।३०।।

लक्ष्मीधरस्य पदपङ्कजचञ्चरीको
लक्ष्मीधरो बुधवरः स्तवमादरेण ।
कृत्वा निवेदयति भक्तियुतो जनो य
एतं पठेत्स हि भवेद्भववन्धमुक्तः ।।३१।।

अध्युष्य रामनगरं सुरशैवलिन्या-
स्तीरं मया कृतमिदं स्तवनं मुरारेः ।
उड्डीयघट्टममलं नितरां मनोज्ञं
नानाविहङ्ग-कल-कूजन-पूरितं यत् ।।३२।।

—*—



# श्रीजगन्नाथस्तोत्रम्

(वसन्ततिलकं वृत्तं)

नीलाचलाधिप विभो जगदेकनाथ,
नीलाम्बुदाभ भगवन् कमलाविलासिन् ।
लीला तवातिरुचिरा प्रचलत्यजस्त्रं,
मूढो जनः कथमिव प्रतिपद्यतां ताम् ।।१

नीलाम्बरेण हलिना बलभद्रनाम्ना
भ्रात्रा समञ्च नियतं परिशोभसे त्वम् ।
मध्ये च वां कृशतनुर्भगिनी सुभद्रा
विद्युत् स्थिरा किमु सितासितमेघमध्ये ।।२

भक्ताननेक्षणसमुत्सुक सारसाक्ष
नीलाद्रिशृङ्गमधिरुह्य महाप्रभाव ।
सोढुं न पारयसि किं निमिषान्तरायं
तेनाधुना कलियुगे किल चक्रनेत्रः ।।३

भक्तार्त्तिनाशनविधौ नितरां पटीय-
श्चक्रं निधाय च सुदर्शनमेव सव्ये ।
उत्थाप्य बाहुयुगलं परिरम्भणार्थ-
मुत्को भृशं किमसि भो भजतां हि शश्वत् ।।४

व्याप्तस्य विष्वगिह नैव गतिर्ध्रुवा स्याद्
व्याप्यस्य सेति किमु ते नहि पादयुग्मम् ।
आम्नायवाक् कथमहो जवनोऽसि भूयो
मिथ्या भवेदिति मतिर्मम शङ्कतेऽद्धा ।।५

चैतन्यरूप भगवन् सकलान्तरात्मन्
कर्णद्वयेन मम किं फलमेव मत्वा ।

शून्योऽसि तेन न शृणोषि परं जनाना–
मार्त्तस्वरं वद विभो किमहं करिष्ये ? ।।६

वड्रे पथे रथवरोपरि दिव्यरूपं
दृष्ट्वा तवातिमुदिता जनता विनीता ।
तारस्वरेण जयघोषयुता समन्तात्
सम्पूरयत्यतितरां गगनं प्रकामम् ।।७

रूपं तवातिरुचिरं परिचिन्त्य चित्ते
मोदाम्बुधावविरतं मुनयो निमग्नाः ।
आलोक्य यद्व्रजवधूर्नितरां हि सक्ता
तत्साम्प्रतं कथय कुत्र विहाय मायाम् ।।८

स्वीकृत्य दारवतनुं निकृतिं तनोपि
ज्ञात्वाखिलं जड इवाभिनयं करोपि ।
क्लिश्यन्ति चेत्तव जना नितरां जगत्यां
किन्ते प्रभुत्वफलमाशु वद प्रभो भोः ।।९

रूपं त्वदीयमतिमात्रमनोज्ञमाहुः
सन्तः सदा न मम रोचत एतदेव ।
त्यक्त्वा रथाङ्गनयनं नलिनेक्षणस्त्वं
स्मेराननः शिखिशिखाभरणो भवाशु ।।१०

श्रीखण्डचन्दनसुशोभितमूर्ध्वपुण्ड्रं
भाले गले सुललितां वनपुष्पमालाम् ।
पीताम्बरं कटितटे शिखरे शिखण्डं
न्यस्याधरे सुमधुरे मुरलीं त्वमेहि ।।११

वेदा वदन्ति हि भवान् खलु पूर्णकामः
सृष्टिस्थितिप्रलयकेलिरियं ततः किम् ?

सत्येच्छ हे वद जवं निकृतिं न कृत्वा
शङ्कामिमां मम हृदो विनिवारय त्वम् ।।१२

त्वन्मायया क्षणिकसौख्यमवाप्तुकामा-
स्तापत्रयेण नितरामभिभूयमानाः ।
जीवाः कथं तव विभो शरणं न यान्ति
भ्रान्ता भ्रमन्ति जनने मरणे जगत्याम् ।।१३

हे भक्तवत्सल कृपाम्बुनिधे समस्ता
लोका भवन्तु सुखिनस्त्वयि भक्तियुक्ताः ।
नो वाधतां जननमृत्युजरादिदुःखं
धर्म्ये पथि प्रचलताज्जनतातिवेलम् ।।१४

नामानि सन्तु वदने मम दीनबन्धो
कर्णद्वयं तव गुणान् सततं शृणोतु ।
त्वन्मन्दिरं प्रति प्रभो चरणौ चलेतां
रूपं विलोकयतु नेत्रयुगं त्वदीयम् ।।१५

विद्यां धनं सुनयनां तनयं यशो वा
नेच्छामि हे पतितपावन दीनबन्धो ।
दीने कृपां मयि विधेहि तवाङ्घ्रियुग्मे
भूयान्मनो मम सदा विषयानपास्य ।।१६

लक्ष्मीधराङ्घ्रिसरसीरुहचञ्चरीको
लक्ष्मीधरो बुधवरः स्तवमादरेण ।
कृत्वा निवेदयति भक्तियुतो जनो यो
नित्यं पठेत् स हि भवेद् भववन्धमुक्तः ।।१७

(शिखरिणी वृत्तम्)

नगे नीले तिष्ठन् सकलजनताकर्षणकरीं
दधत्कान्तिं कृष्णां जलदललितां तापशमनीम् ।
अये भक्तव्रात द्रुतमिह कथं नाससि¹ वदन्
भुजाभ्यां पीनाभ्यां ह्वयसि किमु तद्व्यग्रहृदयः ।।१

हली दक्षे भागे हलमुषलहस्तो विजयते
सुभद्रा मध्ये वां विलसति सदा चम्पकतनुः ।
भवान् सव्ये तस्या मुदिररुचिरश्चक्रनयनो
मनः कर्षन्नद्धाविरतभजतां राजति विभो ।।२

सदाषाढे मासे शरदि तव यात्रातिशुभदा
²शताङ्गानारुह्य व्रजसि भगिनीभ्रातृसहितः ।
वहिर्भक्तान् द्रष्टुं किमुत भगवन्नुत्कहृदयोऽ-
थवा स्थातुं नेच्छा भवति सुचिरं मन्दिरवरे ।।३

द्विजो वा म्लेच्छो वा भवतु नितरां निन्दितजनि-
र्मुखेन्दौ ते दृष्टिर्यदि पतति तत्पूर्ववृपतः ।
स हित्वा पापानां निचयमवनौ पूतजननो
निमज्जत्यह्णायापरिमितमहामोदजलधौ ।।४

प्रणम्य त्वां दूरादुपरिकृतवाहुः स्तुतिरतो
गलद्बाष्पाम्भोभिर्मिलितनयनः प्लावितततनुः ।
न वेत्त्यात्मानं यः प्रवलभवदुःखं कथमसौ
न सन्देहो धन्यं जननमदसीयं भुवि परम् ।।५

जनो यो भक्त्या त्वां प्रतिदिनमहोमन्दिरगतं
विलोक्य द्राङ्नत्वा स्तुतिमुखरितो नर्त्तनरतः ।
वदेत् कः सौभाग्यं मनुजनिचये तस्य सुकृतो
न शम्भुर्नो ब्रह्मा गदितुमपि शक्तो भवति वा ।।६

नृसिंहस्त्वं रामस्त्वमसि मुरलीवादनपटुः
स कृष्णो यो वृन्दावनविचरणे लालसमनाः ।
निहन्तुं म्लेच्छांस्त्वं करधृतकृपाणः प्रतिभयो
युगान्ते कल्की सञ्चरसि धरणौ विप्रतनयः ।।७

न दत्तं विप्रेभ्यो विपुलजनकं जातु भगवन्
तपस्या मे नास्ति प्रचुरमथवा तीर्थगमनम् ।
न सङ्गो वा सद्भिर्विहित इह मुक्त्यै प्रतिदिनं
न तृप्तिर्देवानामकृषि सवनैः किञ्च करवै ?।।८

न मे भक्त्या लेशश्चरणयुगले ते यदुपते
न वैराग्यं किञ्चिज्जगति विषयेष्वस्ति च पुनः ।
क्व वा ज्ञानं स्याद्धो भवजलधिसन्तारणकरं
तवाभ्यर्णे तस्मादटति जन एषोऽखिलसखे ।।९

स्वभक्तांस्त्वं पाया यदि वद विभो चित्रमिह किं
सुनीचः कीटोऽपि स्वजनमवितुं यत्ननिरतः ।
कृतघ्नानामग्रेसरमुपगतं साम्प्रतमिमं
जगन्नाथस्वामिन् सततमव मां [२]दासमवमम् ।।१०

यदि श्रद्धायुक्तः पठति नियतं स्तोत्रममलं
जगन्नाथस्येदं भवति करुणापात्रमतुलम् ।
धनं धान्यं विद्यां तनयमपि सम्प्राप्य सुतरां
शतायुर्देहान्ते विशति स हि वैकुण्ठपदवीम् ।।११

वसन् वाराणस्याममरतटिनीकूलनिकटे
जगन्नाथेऽभक्तः खलमतिरयं विप्रकुलजः ।
विरच्येदं स्तोत्रं चरणयुगले तस्य ददते
मुदा लक्ष्मीपूर्वोधर इति जनैर्यः परिचितः ।।१२

आङ्पूर्वकात् 'अस गतिदीप्त्यादानेषु' धातोः सिप् ।
. शताङ्गान् = रथान्, २. अवमः = अधमः ।

—*—

# श्रीजगन्नाथभुजङ्गप्रयातस्तोत्रम्

जगन्नाथ नाथोऽसि भोः किं न मे त्वं कथं नैव कर्णे ममाभीलवार्त्ताम्
शृणोषि प्रभो हे न शक्नोमि वेत्तुं निदानं किमस्य द्रुतं ब्रूहि तस्मात् ।।१

महाम्भोधिकूले वसन्नीलशैले सुमृष्टान्नपानैः समं तेमनैश्च[१] ।
विभिन्नैरपूपैः करोषि प्रमोदं कृपापाङ्गतो द्राक् कुतो नेक्षसे मां ।।२

रथाङ्गं स्वसव्ये विधायातिभव्यं वलेनाग्रजेन स्वसारं सुभद्राम् ।
गृहीत्वापसव्ये वसन्मन्दिरान्तो दधद्दारुरूपं करोषि प्रभो किम् ?।।३

दयासागरं त्वां प्रशंसन्ति सन्तः किमर्थं कृते मे मरुत्वं समेषि ?
मदीयं यदीदं फलं किल्विषस्य प्रभोऽघारिसंज्ञा तवास्ते वृथा किम् ?

न ते जातिभेदो न वा वर्णभेदो महोदारभावः सदा ते प्रसिद्धः ।
पुरा सालवेगाय प्रभो रथे त्वं सुमेरोर्गुरुत्वं समङ्गीचकर्थ ।।५

न ते स्पर्शदोषः प्रसादेऽस्ति दभ्रं ततः प्राङ् महच्छब्दमाख्यान्ति सन्तः
द्विजोवास्तु शूद्रोऽथवा निम्नजातिः समेषामतीवादरस्तत्र तस्मात् ।।६

कृतस्त्रीप्रसङ्गोऽपवित्रः प्रमत्तो रथं रोद्धुकामः पुरा धर्षितोऽभूत् ।
तदीयापमानाद्रथस्ते मनाङ्नो चचालेति चित्रं त्वदीयं हि वृत्तम् ।।७

तव स्वप्नवाणीं विदित्वातिशीघ्रं पुनस्तं प्रणम्य प्रमत्तं नरेन्द्रः ।
ससम्मानमानाययामास तूर्णं स्वचालीद्रथस्ते किमेतन्न सत्यम् ।।८

न वाह्यं पवित्रं त्वमालोक्य रूपं न पूजां स्तुतिं वा जटां वा त्रिपुण्ड्रम्
गले दीर्घमालां तुलस्या उताहो विधत्सेऽनुकम्पां कदाचिन्मुरारे ।।९

विशुद्धां सुभक्तिं हृदब्जे जनानां विलोक्यानुकम्पा स्वतस्ते भवेद्धि ।
परं सा न लभ्या जने मादृशे हा करिष्ये जगन्नाथ किं मन्दभाग्यः ।।१

रथाङ्गं प्रहित्य न्यहन् प्राग्धि नक्रं गजोद्धारवेषं दधास्येतदर्थम् ।
सुदूरे स्थितस्य प्रविष्टा तदानीं तदीयार्तिवार्ता कथं कर्णयोस्ते ।।११

समीपेऽहमुच्चैर्वदामि प्रपन्नः समीचीनमेतन्न मौनं त्वदीयम् ।
अये दीनबन्धो त्यज द्राक् शठत्वं कृपायाः कटाक्षं मयि त्वं कुरुष्व ।।१२
निजानां सुरक्षा न किं पुत्तिकाद्यैः क्रियते प्रपञ्चे विशेषः क आस्ते ।
तास्मिंस्त्वदीयो विभो भक्तहेतोर्यदि त्वं विधत्से विभिन्नावतारान् ।।१३
न हि स्वप्नतोऽपि स्मृतं ते सुरूपं न नाम ग्रहीतुं कृतो येन यत्नः ।
स्ववक्त्रे कदाचित् यदि त्रातुमर्हो नरं तं तदा त्वं कृपावारिधिः स्याः ।।१४
न माता पिता नो न बन्धुर्न पुत्रो न मित्रं कलत्रं सहायोऽस्ति कश्चित् ।
विना त्वां मम त्राणकर्त्तारमन्यं जगत्यां न पश्यामि कञ्चिद् विचार्य ।।१५
यथा तेऽभिलाषस्तथा त्वं विधेहि सुखं वास्तु दुःखं प्रयच्छ प्रभो हे ।
त्वदीयाङ्घ्रियुग्मे सदा मेऽस्तु भक्तिः सुगाढेति नत्या त्वयि प्रार्थयेऽहम् ।।१६
पठन् स्तोत्रमेतन्नरो भक्तियुक्तो जगन्नाथदेवं यदि प्रार्थयेत ।
अजस्रं प्रसन्नः प्रयच्छेद्धि तस्मै स भोगान् समस्तांश्च मृत्यौ विमुक्तिम् ।।१७
भुजङ्गप्रयातेन वृत्तेन रम्यां विरच्य स्तुतिं सूरिलक्ष्मीधरोऽयम् ।
जगन्नाथपादाम्बुजे यच्छतीमां वसन् जाह्नवीतीरभूमौ हि काश्याम् ।।१८

१. तेमनैः = व्यञ्जनैः, तिअण इत्युत्कलभाषा ।

—*—

# श्रीजगन्नाथशरणागत्यष्टकम्

(उपजातिवृत्तं)

सदा जगन्नाथ गतिर्ममासि त्वया विना नास्ति सहायको मे ।
दुःखे सुखे वा तव विस्मृतिर्नो भवेत् कदाचित्प्रणमामि तुभ्यम् ।।१
त्वमेव सर्वस्य निदानमाद्यं चराचरस्येति वदन्ति वेदाः ।
सृष्टौ स्थितौ संहरणे च माया देव त्वदीया नितरां त्वगम्या ।।२
करोषि सृष्टिं निज शातहेतोः स्वेनैव नापेक्ष्य सहायमन्यम् ।
निगूढतत्त्वं कथमेतदेव ज्ञातुं समर्थाः प्रभवन्तु लोकाः ।।३

कृपा यदि स्यात्तव दीनबन्धो जडोऽप्यरं पण्डितमण्डलीन्द्रः ।
मूकोऽपि वाग्मिप्रवरो भवेद्द्राग् दुस्तर्कणीयो महिमा त्वदीयः ।।४
ब्रह्मा शिवो देवपतिश्च मुग्धास्त्वन्मायया चेत् किमुताल्पलोकाः ।
प्रसीद तस्मात् परिहाय मायां कृपाकटाक्षेण विलोकयास्मान् ।।५
नीलाद्रिनाथेन समः प्रभुः कः सदा दयालुर्निजभक्तवृन्दे ।
शतापराधान् क्षमया विसह्यानयेत् स्ववश्यं भुवनत्रयेऽस्मिन् ।।६
अतः परित्यज्य सुरान् समस्तांस्त्वत्पादमूलं शरणं व्रजामि ।
त्रायस्व मां वा कुरु ते यथेच्छं न त्वामृतेऽहं कमपि श्रयेऽन्यम् ।।७
हे दीनबन्धो जगतामधीश प्रभो जगन्नाथ कृपाम्बुराशे ।
नीलाद्रिसिंहाखिलभक्तवन्धो त्रायस्व मां दुस्तरसंसृतेर्द्राक् ।।८
पद्याष्टकमिदं पुण्यं जगन्नाथस्य यः पुमान् ।
पठेन्नित्यं स लभते सुखं शान्तिञ्च शाश्वतीम् ।।९

—*—

# कालभैरवस्तोत्रम्

हे कालभैरव विभो प्रथितप्रभाव वाराणसीनगरपालनकर्मदक्ष ।
दूरात्समागत इहावसितुं प्रयच्छ योग्यं पदं करुणया कृपणाय मह्यम् ।।१
विश्वेश्वरस्य त्वमसीह रूपान्तरं यत्प्रेतादितापहरणाय ततः क्षमोऽसि ।
नाराध्य पादयुगलं तव कोऽपि जातु स्थातुं सुखं प्रभवतीह जनो न काश्याम् ।।२
कौलेयकं समधिरुह्य कृपाणपाणिः हालामतीवमधुरामधरे निधाय ।
स्मेराननो निजजने करुणाकटाक्षं सम्पातयन्सततमत्र विभासि देव ।।३
देवेन्द्रवन्दितपदोऽसि हि नारदाद्याः स्तुन्वन्ति नित्यममरर्षय एत्य तुभ्यम् ।
त्वन्नामसंस्मरणतो विपदः समस्ता नश्यन्ति वज्रपतनादिव शैलसङ्घाः ।।४
मैरेयसिक्तरसनेन्द्रियतर्पकं यद् [१]वैषारमाज[२]मथवौरण[३]मस्तु मांसम् ।
भक्त्या निवेद्य नमतस्तव पादयुग्मे सम्पूरयस्यभिमतं झटिति प्रसन्नः ।।५
अर्द्धेन्दुशोभिशिरसं घनकृष्णभासं शोणाभनेत्ररुचिरं भसितोज्ज्वलाङ्गम् ।

खड्गं च शूलमभयं वरदं दधानं नागोपवीतशुनकासनमानतोऽस्मि ।।६
दुर्वृत्तवृत्तशमनाय तवोग्ररूपं कान्तं परं नियतमेव हि धार्मिकेषु ।
ज्ञात्वा प्रसन्नहृदयस्त्वयि विश्वनाथः काशीप्रशासनभरं सुचिराद्ददाति ।।७
ये सन्ति बाह्यरिपवोऽप्यथवान्तरस्थास्तेभ्यश्च पाहि शरणागतपारिजात ।
भक्तिस्त्वदीयचरणाम्बुरुहेऽस्तु नित्यं मुक्तिश्च देहपतनात्परमर्थयेऽहम् ।।८
श्रीकालभैरवपदाम्बुजकिङ्करेण लक्ष्मीधरेण रचितं स्तवमादरेण ।
काशीं महेशनगरीमधिवस्तुकामो भक्त्या पठन्सुपदवीं लभतेऽनुरूपाम् ।।९

१. विषारस्य मत्स्यस्येदं वैषारं, २. अजस्य छागस्येदं, ३. उरणस्य मेषस्येदम्।

—*—

# अन्नपूर्णास्तोत्रम्

मातर्धराधरपतेः प्रियपुत्रि तुभ्यं नत्वा क्षुधातुरजनोऽर्थयतेऽयमन्नम् ।
काशीश्वरी त्वमसि सर्वजनप्रसिद्धा कारुण्यसागरी चराचरजन्मदात्री ।।१
पीयूषपूर्णकलसं निजवामहस्ते दक्षे महारजतदर्वीमये दधानाम् ।
विश्वेश्वराय ददतीं किमपि प्रसन्नां त्वां ध्यायतां जननि पीडयति क्षुधा नो ।।२
आरक्तपट्टवसनेन महार्घरत्नव्यूहाञ्चितैश्च विविधैः कलधौतभूषैः ।
संशोभिता स्मितमुखी घृतदर्विहस्ता सिंहासने त्रिनयनेऽसि विराजमाना ।।३
चन्द्रार्द्धचारुमुकुटां वरकुण्डलाढ्यां नेत्रत्रयेण परिशोभितवक्त्रपद्माम् ।
कारुण्यपूर्णनयनां कुचकुम्भनम्रां ध्यायन्ति ये जननि ते सुखिनोऽनिशं त्वाम् ।।४
दुर्दैवतस्तवपदाम्बुजभक्तिहीना नान्नं न वस्त्रमथवा भवनं मनोज्ञम् ।
सम्प्राप्नुवन्ति भुवने यशसः कथा का का वा सुखस्य बत ते खलु शोचनीयाः ।।५
प्रालेयपर्वतसुते प्रथितप्रभावे प्रत्यक्षमेतदिति सर्वजना वदन्ति ।
वाराणसीं तव कृपावशतः श्रितानामन्नस्य जातु न भवानि भवेदभावः ।।६
भूयस्त्वमेव कमला कलधौतगात्री काली कदाचिदपि कार्यवशाद्भवन्ती ।
दुष्टान् विनाशयितुमेव बिभर्ति खड्गं साधून् वराभयकरा परिपातुकामा ।।७

सूर्येन्दुवह्निनयने शिववामभागे संशोभसेऽतिमुदिता निजभक्तवृन्दे ।
त्वद्रूपचिन्तनविधौ विधिविष्णुसेव्ये कालोऽनिशं व्रजतु मे परिहाय सर्वम् ।।८
संयोगतस्तव शिवः सकलं विधत्ते हीनस्त्वया शवसमो भवतीति सत्यम् ।
ईशस्य मन्मथरिपोः स्थितिरीदृशी चेद्ब्रह्मादिदेवविषयेषु पुनः कथा का ।।९
नामानि ते जननि ये सततं जपन्ति श्रद्धान्विताः सुकृतिनो नहि ते कदाचित् ।
स्वप्नेऽपि दुःखमणुमात्रमथाप्नुवन्ति मोक्षं प्रयन्ति मरणात्परमेव सद्यः ।।१०
अन्नपूर्णेति ते नाम महादारिद्र्यनाशनम् ।
क्षुत्तृट्पीडाप्रशमनं ज्ञानविज्ञानकारणम् ।।११
गिरिवरतनये गिरीशकान्ते तव महिमानमये गिरा कथञ्चित् ।
सुरनरदनुजेषु नास्ति कश्चित्प्रकटयितुं कणशोऽपि यः क्षमः स्यात् ।।१२
अयि महिममयि प्रसीद तस्मात्कृतमथवा क्रियते मया यदागः ।
शिशुरिव नितरां हि बोधशून्यस्तव पुरतः प्रणमामि भक्तियुक्तः ।।१३
इह न मम समोऽधमो धरित्र्यां भवति भविष्यति वाभवत्पुराम्ब ।
नहि तव सदृशी च काचिदन्या कुरु करुणां करुणामयी मयि त्वम् ।।१४
देव्यन्नदाचरणपङ्कजचिन्तनेन स्तोत्रं प्रणम्य यदि नित्यमिदं पठेद्यः ।
प्राप्नोत्यसौ च धनधान्यकलत्रपुत्रानन्तेऽपि मोक्षमतुलं मुनिभिर्दुरापम् ।।१५
कन्दर्पदर्पदलनस्य वृषध्वजस्य वाराणसीमधिवसन्प्रियराजधानीम् ।
देवापगातटभुवं प्रथितां चिराय लक्ष्मीधरोऽव्यररचत्स्तवमेतमेव ।।१६

—*—

# विशालाक्षीस्तोत्रम् (वासेलीस्तोत्रम्)

*(उत्कलप्रदेशस्थवालेश्वरमण्डलान्तर्गत 'भोगराई' ग्रामे देवीयं विराजते।)*

विशालाक्षि मातस्त्वमेका भवेऽस्मिन् मम त्राणकर्त्री गतिर्नापरास्ति ।
तवाहं नितान्तं सुतेष्वस्मि मूढः प्रसीदायि तस्माद्विलम्बं कृथा मा ।।१
गले मुण्डमालां मुखे चारुहास्यं कपालेऽग्निनेत्रं शिरस्यर्द्धचन्द्रम् ।
सुवर्णाङ्गकान्तिं सदा धारयन्तीं शवे न्यस्तपादां भवानीं भजेऽहम् ।।२

पादाम्भोजयुग्मं त्वदीयं शरण्ये भजन्ते जना ये भवे भक्तियुक्ताः ।
विपद्वारणार्थं हि तेषां विभर्षि करे तीक्ष्णखड्गं तथा चापि खेटम् ।।३
अपूपैर्विभिन्नैर्युतं पायसञ्च विसारान्वितं तेमनं पक्वमन्नम् ।
सदा ते प्रियन्तेऽर्पयन्तो लभन्ते न कान् वा हि भोगान्न जानाम्यहन्तान्।।४
दिनेऽङ्गारकस्याथवा शौरिवारेऽर्च्चयित्वोपचारैर्निजाभीष्टसिद्धिम् ।
कति प्राप्तवन्तः कतीहाप्नुवन्तीति वक्तुं समर्थो भवेत्कः कथं वा।।५
प्रसीद प्रपन्नार्तिविध्वंसयित्रि प्रकामं ममाज्ञानमाशु प्रणाश्य ।
त्वदीयाधमो भृत्य इत्थं विचिन्त्य प्रयच्छ स्वरूपं चिराय भ्रमामि।।६
त्वमेवासि कर्त्री त्वमेवासि धर्त्री त्वमेवासि हर्त्री त्वमेवासि सर्वम्।
भवाम्भोधिपारं विना त्वां नयेत्को न जाने प्रपद्ये ततस्त्वां त्रिनेत्रे ।।७
न मत्तोऽपराधी भवेदत्र विश्वे क्षमासागरी नास्ति तेऽम्बापि तुल्या ।
विचार्येति चित्ते यथा तेऽभिलापस्तथा त्वं विधेहि श्रुतिख्यातकीर्ते ।।८
ज्ञलक्ष्मीधरेण प्रणीतं शिवायाः पठेत्स्तोत्रमेतद्यदि श्रद्धयैव ।
जनो योऽत्र सस्याद्धि सौभाग्ययुक्तो लभेतापि मोक्षं शरीरस्य पाते।।९

—*—

# गङ्गास्तोत्रम्

शैलाधिराजतनये शितिकण्ठमौलौ
मालेव राजसि सदामलमौक्तिकानाम् ।
आसाद्य भारतभूमिस्तवकाङ्गसङ्गं
पापापहं भवति धन्यतमात्र लोके ।।१
सन्त्यत्र मर्त्यभुवने बहवस्तटिन्यो
न त्वादृशी भवति कापि सुरेशवन्द्ये ।
विष्णोः पदाब्जमकरन्दस्वरूपभूते
पापानि नाशयति ते सलिलं हि पीतम् ।।२

देवेन्द्रवन्दितपदोऽपि पितामहाद्यैः
संसेव्यमानचरणोऽपि महेश्वरोऽपि ।
माहात्म्यमस्ति तव यत्सकलातिशायि
प्रेम्णा स्वयं धरति मूर्ध्नि शिवस्ततस्त्वाम् ।।३

अर्द्धाङ्गलाभवशतः सुभगाभिमाना-
दारुह्य शङ्करशिरः प्रसभं किमम्ब ।
फेनच्छलेन हससीह गणेशमातुः
सापत्न्यमेव वत सर्वकलेर्हि बीजम् ।।४

यस्यास्थि मज्जति तवाम्भसि जातु मातः
सद्यः प्रयाति स दिवं धृतदिव्यरूपः ।
कल्पप्रसूनरचिताः स्रज आशु धृत्वा
धावन्त्यधीरहृदयास्तमवेक्ष्य देव्यः ।।५

देशे दवीयसि सदा वसतो यदि स्याद्
गङ्गेति नाम वदने तव हन्त मातः ।
कीनाशकिङ्करमुखं विकटं न पश्येत्
गच्छेद्दिवं ध्रुवमसौ भवतीप्रसादात् ।।६

कुन्देन्दुशङ्खधवलां तव दिव्यकान्तिं
चेखिद्यते मम मनो मलिनां निरीक्ष्य ।
त्वत्तीरवासिमनुजा यमभीतिहीनाः
कुर्वन्ति किं वृजिनराजिमयेऽधुनाम्ब ।।७

नीरे वरं तव झसः कमठोऽथवा स्यां
तीरे कृशाङ्गशरटोऽपि हि पूजनीये ।
दूरे धराधिपगणैरभिवन्दनीयः
शूरेन्द्रशास्त्रनिपुणो नहि चक्रवर्ती ।।८

नारं शिर:करतले सततं दधानः
शावेन भस्मनिचयेन विलिप्तदेहः ।
शूली जटी पशुपतिर्हरिदम्बरोऽपि
त्वद्गात्रसङ्गवशतः खलु विश्वनाथः ।।९

तप्तं तपो न विपुलं द्रविणं न दत्तं
नो वा हुतं हुतवहे विधिवत्कदाचित् ।
देवार्च्चनं न विहितं मयकाधुना त्वां
मातर्ह्युपैमि शरणं कुरु ते यथेच्छम् ।।१०

त्वत्तीरभूमिवसतिः सुलभा मम स्यात्
स्नानं तवाम्भसि भवेन्नियतं महेशि ।
पीयेय तत्सुविमलं मरणञ्च काश्यां
भूयाद्द्वयस्व जननि प्रणतोऽस्मि तुभ्यम् ।।११

पुण्यात्मनां सुमहतां सततं सतां हि
सङ्गोऽस्तु मे नहि भवेदसतः कदाचित् ।
धर्म्ये च वर्त्मनि मती रमतामजस्रं
सन्तारयाशु भवसागरतः सुरेशि ।।१२

शितमकरनिषण्णे शुक्लवासो वसाने
शशधरसमवक्त्रे चन्द्रचूडे त्रिनेत्रे ।
अभयवरदहस्ते श्वेतगन्धानुलेपे
सकलकलुषनाशे देवि गङ्गे प्रसीद ।।१३

माघे प्रयागनगरे ह्यवतिष्ठमानो
लक्ष्मीधरो रचितवान्परमादरेण ।
देवापगास्तुतिमिमां यदि भक्तियुक्तो
नित्यं पठेत्स हि भवेद्भवबन्धमुक्तः ।।१४

—*—

# लक्ष्मीस्तोत्रम्

अभयवरदहस्ता रक्तपद्मासनस्था
उपरितनभुजाभ्यां फुल्लपद्मे दधाना ।
मणिमयमुकुटाढ्या पट्टवासो वसाना
सकलविभवदात्री पातु मां सिन्धुपुत्री ।।०।।

त्यक्त्वा सुरांश्च दितिजानवृणीत या प्राङ्
नारायणं वरणमाल्यकरादिदेवम् ।
क्षीराब्धिमन्थनविधौ दयतां सदा सा
लोकत्रयस्य जननी मयि मन्दभाग्ये ।।१।।

यस्याः प्रसन्नवदनं प्रसमीक्ष्य विष्णुः
स्वस्थो वभूव दितिजेन्द्रवधार्थरोषम् ।
विस्मृत्य तत्क्षणमहो धृतशान्तमूर्तिः
सैव प्रसीदतु सदा भृगुनन्दना मे ।।२।।

पीयूषसागरसमुद्भवचारुगात्री
कारुण्यपूर्णहृदयाखिलविश्वधात्री ।
भक्तेष्टदाननिरता कलुषापहन्त्री
मातस्त्वमेव भव मे द्रविणप्रदात्री ।।३।।

आभोगभोगमधितिष्ठति चक्रपाणिः
शेषस्य निर्भयमये तव सुप्रभावात् ।
जानात्यसौ दृढतयामृतसोदरायाः
सान्निध्यतो न हि विषेण च कापि हानिः ।।४।।

ये तावकं चरणपङ्कजमेव नित्यं
भक्त्यार्च्चयन्ति भुवनेऽत्र हि धन्यधन्याः ।

दारिद्र्यदु:खमवनौ न हि जातु तेषां
स्वप्नेऽपि सम्भवति ते करुणावशाद्वै ।।५।।

यस्मिन् प्रसीदसि भवेत्स हि लोकमान्य:
कन्दर्पसुन्दरवपु: स्मितशोभिवक्त्र: ।
कुन्देन्दुकान्तियशसोऽतुलनीयपात्रं
वाक्यं सुधोपममहो भवतीह तस्य ।।६।।

दौर्विध्यदु:खदलनाय विना त्वया क:
शक्तोऽस्ति सिन्धुतनये भुवनत्रयेऽस्मिन् ?
वैमुख्यतस्तव पुरा मघवापि साक्षाद्
भ्रष्टो दिवश्चरमदु:खमवाप मर्त्ये ।।७।।

[१]आरूढवह्निप्रथमोष्मणि सव्यनेत्रं
खण्डेन्दुना विलसितं तव बीजमन्त्रम् ।
य: सन्ततं जननि तावकदिव्यरूपं
ध्यात्वा जपेत्स हि भवेत्खलु राजराज: ।।८।।

अष्टोत्तरं शतमये सरसीरुहाणा-
मङ्घ्रिद्वये प्रतिदिनं यदि मासमेकम् ।
विश्राणयेत्तव मनुं मनसा स्मरन् यो
नूनं भवेत्स धरणीतलचक्रवर्ती ।।९।।

य: पद्मवीजगुटिकारचितां हि मालां
धृत्वा करेऽनुदिनमम्ब मनुं त्वदीयम् ।
अष्टोत्तरं दशशतं जपतीहशान्त:
सौभाग्यभोगमतुलं लभते ध्रुवं स: ।।१०।।

पूर्वं कृतं न सुकृतं तु मयाम्ब किञ्चित्
तद्भुज्यते फलमिदं नितरां हि दैन्यम् ।

किञ्चित्कृपाञ्चितदृशा यदि नेक्षसे मां
का वा गतिर्मम भवेत्तदहं न जाने ।।११।।
क्षीराब्धिजे क्षणमिहास्तु कृपेक्षणन्ते
क्षीणे जनेऽतिकृपणे क्षपयातिदैन्यम् ।
क्षोदक्षमो नहि वृषः कथमस्तु भद्रं
क्ष्वेडोऽस्मि नो जननि सत्यमहं वदामि ।।१२।।
तस्मादुपैमि तव पादमूलं दयस्व
क्षान्त्वा समस्तदुरितानि कृपामयि त्वम् ।
त्यक्त्वा तवाङ्घ्रिकमलं मम चित्तभृङ्गं
कुत्रापि जातु नहि यातु कथञ्चिदम्ब ।।१३।।
भव दीनजनेऽनुकम्पना मयि मातस्तव पुत्रके सदा ।
त्वदृते नहि काचिदस्ति मे गतिरन्याश्र भुवनत्रये यतः ।।१४
यदीयपादाम्बुजयुग्मकं स्मर-
न्नुपैति लोकः सकलं स्वभीप्सितम् ।
नमामि तां काञ्चनकान्तविग्रहां
जलाधिपस्यावरगात्र[2]सम्भवाम् ।।१५।।
त्वां विना न भवेत्काचिद्दैन्यदुःखापहारिणी ।
सर्वदा सर्वदा भूया मयि भक्तानुकम्पने ।।१६।।
इदं स्तोत्रं पठेन्नित्यं यो जनो भक्तिसंयुतः ।
सुप्रसन्ना भवेत्तस्मिन् सन्ततं कमलालया ।।१७।
नश्यति तस्य दारिद्र्यं लभते सुखमुत्तमम् ।
अन्ते वैकुण्ठमाप्नोति महालक्ष्म्याः प्रसादतः ।।१८।।

—*—

१. वह्निः = र, प्रथमोष्मा= श, सव्यनेत्रं = ई, खण्डेन्दुः = ँ = श्रीँ इत्यर्थः।
२. अवरगात्रसम्भवां = कनिष्ठकन्याम् ।

# धनप्रदं लक्ष्मीस्तोत्रम्

## (शार्दूलविक्रीडितम्)

वित्तं देहि कृपामयि प्रविलसत्पाथोजपुष्पासने
चञ्चच्चम्पकचारुगात्रलतिके चामीकरालङ्कृते ।
ब्रह्मेन्द्रादिसुरार्चिते सुचरिते दारिद्र्यदुःखापहे
क्षीराब्धितनये मयि क्षणमिहाधेहि कटाक्षं मनाक् ।।१

त्वं सृष्टाववने च संहृतिविधौ रूपत्रयं बिभ्रती
गायत्री कमला च रुद्रगृहिणी चण्डी समाख्यायसे ।
त्वां त्यक्त्वा कमलासनो न च हरिः नो वा स्वयं शङ्करः
स्त्रष्टुं पालयितुं भवन्ति हि तथा सहर्तुमीशा जगत् ।।२

यस्याः पाणियुगं समृद्धिपिशुनोत्फुल्लाब्जसंशोभितं
नित्यं चोद्ध्वगतं तथाभयकरं भक्तेष्टदं नीचगम् ।
कारुण्याञ्चितचारुचन्द्रवदनं दैन्यान्धाकारापहं
भक्तानामनिशं भजे भगवतीं तां विष्णुवक्षःस्थिताम् ।।३

यस्याः सुस्मितवक्त्रमिन्दुसदृशं दृष्ट्वा कटाक्षच्छटां
मौर्वीमिव मनोहरां मधुकरश्रेणीं स्मरस्याञ्जसा ।
रक्षोभिः सह युद्धजातप्रचुरां श्रान्तिं जहौ श्रीहरिः
भक्तानामभयप्रदा भगवती सा मा सदा रक्षतात् ।।४

कारुण्यामृतवारिधिः श्रुतिनुता भक्तेष्टदाने ह्यला
शश्वद्धर्मपथानुयायिजनताकल्याणसम्पादिनी ।
यामाराध्य नरो भवेत्सुरपतिः कल्पाङ्घ्रिपेशः स्वराट्
यत्कोपाच्च पुनर्विसावटगतः सा मे गतिर्नापरा ।।५

दृष्ट्वा तीव्रतपो भृगोः सुमनसामानन्दसन्दायिनी
या तुष्टा शिशुकन्यकासमभवत्क्रोडे तदीये पुरा ।

लोके ख्यातिमुपागता च सुचिराद्या भार्गवीसंज्ञया
सा मे दैन्यतमोऽपसारणविधौ ज्योत्स्नायतां सन्ततम् ।।६
मातः सागरसम्भवे सुविपुलाह्लादप्रदश्चन्द्रमा
भ्राता ते प्रथितः समस्तभुवने कल्पाङ्घ्रिपस्तत्त्वतः ।
स्याद्यस्मिंल्लवमात्रमेव करुणादृष्टिः पतेत्सोऽञ्जसा
कन्दर्पाधिकसुन्दरश्च जनतामान्योवदान्याग्रणीः ।।७
[1]वान्तं [2]वह्निसमन्वितञ्च सततं [3]वामाक्षिसंशोभितं
[4]चन्द्रार्द्धाङ्कितमस्तकं तव मनुं नित्यं जपेद्यो जनः ।
स्नातः पुष्करमालयादशशतं भक्त्या समर्च्याम्बुजैः
स स्यादिन्द्रसमानवैभवयुतो धन्यातिधन्यो ध्रुवम् ।।८
मातर्भार्गवि लोकधात्रि कमले विल्वाटवीवासिनि
विष्णोर्वक्षसि संस्थिते श्रुतिनुते पद्मालये रक्ष माम् ।
इत्येवं भजतां भवेन्न भवने दारिद्र्यदुःखं मनाक्
सम्पत्पुत्रसमन्वितः स सुचिरं जीयाद्धरामण्डले ।।९
लक्ष्मीधराङ्घ्रिसरसीरुहचञ्चरीको
लक्ष्मीधरो व्यररचत्स्तवमादरेण ।
लक्ष्म्याः कृपाप्रदमिमं यदि भक्तियुक्तो
नित्यं पठेत्स हि भवेद्धनधान्यपूर्णः ।।१०

—*—

१. वान्तं = श, २. वह्निः = र, ३. वामाक्षि= ई, ४. चन्द्रर्द्धः= ँ, "श्रीँ" इत्यर्थः ।

# सरस्वतीस्तोत्रम्

प्रस्फारपङ्केरुहमध्यसंस्थितां निक्वाणयन्तीं मधुरं विपञ्चिकाम् ।
हस्तान्तराभ्यां स्फटिकाक्षमालिकां सन्धारयन्तीं श्रुतिपुस्तकं भजे ।।१

हंसाधिरूढे हरिचन्दनादिभिः सुगन्धिजातैर्विहिताङ्गलेपने ।
गले ललन्मौक्तिकमालशोभिते भीतेऽनुकम्पां मयि धत्स्व साम्प्रतम् ।।२

कृपामयि त्वत्पदपङ्कजार्च्चना कृता कदाचिन्नहि मन्दभाग्यतः ।
कुन्देन्दुकान्तिः सुमनोहरा तनुर्ध्याता न वा ते जननि क्षणं मया ।।३

[१]स्वरेषु यो द्वादशवर्ण इष्यते स विन्दुनोपेतमनुस्तवाम्बिके ।
यो जाड्यदोपापह उद्यते बुधैर्नवाजपं तं नितरां सुदुर्मतिः ।।४

करे गृहीत्वा स्फटिकाक्षमालिकामष्टोत्तरं यः शतमन्वहं जपेत् ।
मन्त्रं त्वदीयं यदि हायनं भवेद्ध्रुवं सुमेधाः कृपया तवाप्यसौ ।।५

उपोष्य भक्त्या शुचिपञ्चमे तिथौ समर्च्य कुन्दैः कुसुमैः सुसंयतः ।
जपेत्त्वदीयं यदि मन्त्रमुत्तमं भवेत्स शास्त्राटविकेशरी ध्रुवम् ।।६

किमाक्षपादे कणभुङ्नयेऽथवा किं जैमिनीये फणिभापितेऽपि वा ।
निरर्गलं धुर्द्धरतामुपेयुषो न तस्य कश्चित्प्रतिपक्षतां चरेत् ।।७

हृद्यानवद्यान्यतिकोमलान्यलङ्कारैरुपेतानि रसान्वितान्यपि ।
गद्यानि पद्यानि च तन्मुखाम्बुजान्निर्यान्त्यजस्रं गिरिनिर्झराम्बुवत् ।।८

उपास्य भक्त्या तव पादपङ्कजं श्रीकालिदासादिकवीश्वराः क्षितौ ।
जाताः सुशास्त्राम्बुधिपारगामिनो जीवन्ति कीर्त्या वपुषा हि साम्प्रतम् ।।९

हन्तुं सुरेन्द्रं विहिते मखे पुरा वृत्रस्य शुक्रेण वृहस्पतेर्गिरा ।
व्यत्यस्य मातः कविकण्ठसंस्थिता स्वरं [२]त्वमावीः पुरुहूतमञ्जसा ।।१०

शराहतस्यैव किटेर्ध्वनिं हठान्निशम्य त्वन्मन्त्रनिभं जडोयुवा ।
आवर्त्तयञ्चेतसि लब्धवान्धियं वभूव विद्वान् किमिहास्ति चित्रता ।।११

मातस्तवाराधनमन्तरेण कः शास्त्रस्य तात्पर्यमवाप्तुमर्हति ।
यशः शरच्चन्द्रमरीचिसन्निभं लभेत वालब्ध न वेद्मि तं जनम् ।।१२
कृपामयि त्वत्कृपया जडो भवेत्सुमेधसामग्रग एव सर्वथा ।
स्तुवन्ति लोकाः सुचिराय तं भवे यशःशरीरेण स जीवति ध्रुवम् ।।१३
कदा स्वयम्भोरथवा कदा स्वभोरभूस्त्वमेवाम्ब मनःप्रमोदिनी ।
सदा हि शम्भोर्वपुपार्द्धसङ्गते नतेऽस्ति कश्चिद्भुवि तत्त्वविज्जनः ।।१४
वाचालवज्जल्पनमम्ब मे ध्रुवं कर्णे त्वदीये मुदमातनोत्विदम् ।
शिशोर्निशम्याशु कलं स्खलद्वचो यथा सवित्री हि भृशं प्रमोदते ।।१५
लक्ष्मीधरोऽहं तव सूनुरेष ते स्तुतिं त्वदीयां चरणे समर्पये ।
विन्दत्वसौ ते करुणामहर्निशं पठेदिमां यो हृदि भक्तिसंयुतः ।।१६

—*—

१. ऐँ इत्यर्थः । २. आवीः = रक्षितवती

## शारलास्तोत्रम्

हे शारले सकललोकहितैषिणी त्वं कारुण्यपूर्णहृदया सततं प्रसन्ना ।
संसारसागरसमुत्तरणैकपोतः पादारविन्दयुगलं तव देवि सत्यम् ।।१

त्वन्नाम संस्मरणतो जडतापयाति
वैपश्चिती प्रणयिनी भवतीह लोके।
मूकोऽपि वाग्मिनिचये लभते प्रसिद्धिं
रोगाद्विमुक्तिमविलम्बितमेति लोकः ।।२

दारिद्र्यदुःखदहनप्रशमाय मातः
किञ्चित्कृपाञ्चितदृशेक्षणमम्बुवृष्टिः।
स्याद्यस्य केवलमसौ न भवेद्धनाढ्य-
स्तत्किङ्करा अपि भवन्ति कुवेरकल्पाः।।३

भ्रूभङ्गभीषणमुखं प्रसभं समीक्ष्य
भीता द्रवन्ति दनुजा बहुदूरदेशान्।

वात्सल्यपूर्णकरुणाकलितं तवैतद्-
दृष्ट्वैव मोदमतुलं मनुजा लभन्ते ।।४

सिद्धेश्वरः कृषकवंशजनिर्बभूव
दूरेऽस्तु शास्त्रपठनं कृषिकर्मसक्तः।
लब्ध्वा कृपां समभवत्तव संज्ञया स
ख्यातः कविः प्रथम उत्कलदेशभूमौ।।५

देवीपुराणमथ भारतमालिलेख
रामायणञ्च तव यन्महिमातिवेलम् ।
आलोक्य यानि विबुधाश्चकिता भवन्ति
नूनं कृपाफलमिदं प्रवदन्ति सन्तः ।।६

काली त्वमेव कमला कमलासनस्य
जाया कला जननि ते सकला जगत्याम् ।
जानाति केवलमिदं विमलं हि तत्त्वं
यस्त्वत्प्रसादमधिगच्छति भक्तियुक्तः।।७

धाता ससर्ज भुवनानि तव प्रसादा-
त्तेषां हि रक्षणविधौ स विधुः समर्थः ।
कल्पान्तकालमधिगत्य हरो हि हर्त्ता
सृष्टिस्थितिप्रलयकेलिविलाससक्ते।।८

नैवास्ति मे गुणगणो नहि चाभिजात्यं
नो वाप्यनल्पविभवस्तव तुष्टये हा।
नो मन्त्रसाधनमथो नहि चोपचारा
मातर्नितान्तमवमोऽस्मि मयि प्रसीद।।९

नो भव्यकाव्यमथवा विपुलं च वित्तं
नो कामये वरवधूं नितरां मनोज्ञाम्।
आज्ञावहान् विनयिनस्तनयान् कदाचित्
त्वत्पादपद्ममनिशं जननि स्मराणि।।१०

[1]कण्ठीरवोपरि विशोभितसव्यपादं
दैत्याधिपृष्ठमपरञ्च निधापयन्तीम्।
[2]वाहद्विषद्दनुजवक्षसि तीक्ष्णशूलं
त्वां चिन्तयन्त्यविरतं मुनयो विमुक्त्यै।।११
सुधाशिलाच्छादितमन्दिरोदरे वुधास्तवाङ्घ्रिद्वितयं मुदान्विताः ।
मुधा समर्च्याहुरये कृपामयि क्रुधा किमर्थं न शृणोषि मद्गिरम् ।।१२
इभारिवरवाहने त्रिपुरशत्रुसम्मोहने
त्रितापदहने घने पतितमम्ब मामुद्धर ।
[3]कपूयचरणे जने नहि करोति कश्चित्कृपां
ततोऽहमिह कातरो जननि तुभ्यमभ्यर्थये ।।१३
कनकपुरनिवासा तप्तहेमप्रकाशा
मृदुमधुरसुहासा मौक्तिकाकल्पनासा।
विधिहरिहरदासा ध्वस्तदुष्कर्मपाशा
जयति भवविलासा क्लृप्तदैत्यालिनाशा ।।१४
कलिकलुपनिहन्त्री भुक्तिमुक्तिप्रदात्री
सकलभुवनधात्री विश्वसंस्थानकर्त्री ।
विधिहरिहरमुख्यान् कर्मसु प्रेरयित्री
भवतु मम भवाब्धौ शारला तारयित्री।।१५
लक्ष्मीधरेण रचितां स्तुतिमादरेणाजस्रं
पठेद्यदि जनोऽति विशुद्धचेताः।
श्रीशारला भवति तत्र हि सुप्रसन्ना
मुच्येत सोऽत्र विविधानि सुखानि भुक्त्वा ।।१६

१. कण्ठीरवः = सिंहः, २. वाहद्विषद् = महिषः, ३. कपूयः= मन्दः

—*—

# समलेश्वरीस्तोत्रम्

पद्मासनामभिनवोदितसूर्यकान्तिं
पाशाङ्कुशाभयवरान् दधतीं स्मितास्याम् ।
चन्द्रार्द्धशोभिमुकुटां समलेश्वरीं तां
तुङ्गस्तनीं त्रिनयनां हृदि चिन्तयामि ।।

हे सोमलेश्वरि तवाङ्घ्रिसमर्च्चनेन
सर्वं हि नश्यति मलं शरणागतानाम् ।
तस्मात्त्वमेव जननि प्रथितासि लोके
शश्वत्कृपामयि पुनः समलेश्वरीति ।।१

मांसं सुराञ्च कवकं लसुनं पलाण्डुं
ये गृह्णनञ्च नियतं प्रतिसिद्धमन्यत् ।
भुक्त्वापि खाद्यमनिशं त्वयि भक्तियुक्ता-
स्तान् पामरानपि नरान् परिपासि देवि ।।२

ब्रह्माथवा हरिहरावथवा गणेशो
ये चापि सन्ति विबुधा इतरे समस्ताः ।
ते धार्मिकेषु सततं किल सुप्रसन्ना
नालोकयन्ति समलांललवमात्रमम्ब ।।३

पङ्कावलिप्तवपुषं परिवीक्ष्य पुत्रं
नोपेक्षते हि जननी घृणया कदाचित् ।
प्रक्षाल्य गात्रमथ सा खलु प्रोञ्छयन्ती
शाट्यापि धारयति स्वाङ्कगतं विधाय ।।४

कामादिशत्रुनिबहेन हि पीड्यमानो
धर्म्यात्पथोऽनिशमहं स्खलितो भवामि ।
सन्ताड्य तं कुरु जवं गदया दविष्ठं
मां पाहि मङ्गलमयी भुवनेश्वरि त्वम् ।।५

चित्रोत्पलेति विदितास्तिमहानदी या
पुण्याम्भसोत्कलभुवं किल धावयन्ती ।
तत्तीरशाल्मलितलं परिशोभयन्ती
सा त्वं विभासि सुचिरात्समलेश्वरीति ।।६

लब्ध्वापि भूसुरतनुं यवनाङ्गनायाः
सङ्गेन दूषितमतिर्नितरां बभूव ।
यो देवमूर्तिनिचयं ह्यभनगुदुरात्मा
तं [1]कालपर्वतमहन् स्वयमेवपूर्वम् ।।७

ये त्वां स्मरन्ति जननीं भवबन्धमुक्त्यै
येऽन्येऽथवात्र भुवने सुखभोगलब्ध्यै ।
तेभ्यो ददासि नियतं सकलं हि तत्तत्
न त्वादृशी भवति कापि सुरेशवन्द्ये ।।८

रूपाणि ते वहुविधानि भवन्ति लोके
नामानि चापि जगदम्ब च कीर्तितानि ।
रूपैस्तु तैरपि च नामभिरेव देवि
त्वं पासि भक्तनिचयं सततं प्रसन्ना ।।९

ब्रह्माण्यसीह भुवने निखिले प्रसिद्धा
त्वं वैष्णवी विपुलभोगविभावयित्री ।
त्वं शाम्भवी सकललोकहितैकदृष्टि-
र्मातर्मदीयहृदये सततं विराज ।।१०

लक्ष्मीधरेण विदुषा रचितां स्तुतिं यो
भक्त्या पठेद्यदि जनः प्रतिघस्रमेतां
ध्यात्वा स्वकीयहृदये समलेश्वरीं तां
भुक्त्वा स भोगमखिलं लभते हि मुक्तिम् ।।११

(१. कालपर्वतः 'कलापाहाड' इति ख्यातः बङ्गनवाव यवनराजसेनापतिः सुलेमान् कर्दानिः जात्या ब्राह्मणोऽप्यसौ यवनकन्यां परिणीय इसलामधर्म-मङ्गीचकार स आक्रम्य उत्कलेषु बहूनि मन्दिराणि देवविग्रहांश्च बभञ्ज । समलपुरे देवी तं न्यहन् । तस्य समाधिः (कबर)तत्रास्ति ।

—*—

# समलेश्वरी प्रातःस्मरणस्तोत्रम्

प्रातः स्मरामि समलेश्वरि ते पदाब्जं
संसेव्यमानमनिशं मुनिमानसोत्कैः ।
कल्याणदं कलिमलापहमद्वितीयं
चक्रारविन्द-झसदण्डरेखाङ्कितं यत् ।।१

प्रातर्भजामि समलेश्वरि ते पदाब्जं
मञ्जीरमञ्जु भवसागरपोतरूपम् ।
दुर्द्दान्तकालनग[1]चूर्णनवज्रकल्पं
कल्पांघ्रिपं सकलभक्तजनस्य शश्वत् ।।२

प्रातर्नमामि समलेश्वरि ते पदाब्जं
शम्भोः शिरःशशिकलाकलितं कदाचित्।
कामारिकाम्यमुरसापि च धीयमानं
लाक्षाक्तमाद्यमखिलागमवेद्यतत्त्वम् ।।३

लक्ष्मीधरेण विदुषा रचितं स्तवं यः
श्लोकत्रयात्मकमिमं हृदये विचिन्त्य ।
भक्त्या प्रणम्य च नरः समलेश्वरीं चेत्
प्रातः पठेत्प्रतिदिनं स भवेत्सुखीह ।।४

—*—

१. कालनगः= कलापाहाडः ।

# उत्पलेश्वरी-नारायणीस्तोत्रम्

*(जगत्सिंहपुरादैशान्यकोणे द्वादशकिलोमिटरदूरे गह्मापुराग्रहारे उप(त्प)लेश्वरीमन्दिरमस्ति । तत्र उपलेश्वरी-नारायणीदेव्यौ विराजेते। अभीष्टपूरणविषये निकटवर्त्तिग्रामेषु तत्प्रसिद्धिरस्ति । माघशुक्लसप्तम्यां मेलायां तत्र जनसम्मर्द्दो भवति ।)*

एकापि मूर्तियुगलेन विराजमाने गह्मापुरे विजनचूतवनीप्रदेशे ।
शोणारविन्दरुचिरं वसनं वसाने भक्तार्तिनाशनपरे भवतो युवां वै।।१

अध्यास्य रक्तकमलं कमलञ्च खड्गं सृष्टिञ्च संहृतिमथो परिसूचयन्तीम्।
धृत्वेष्टदाभयकरां प्रणतार्तिहन्त्रीं तामुत्पलेश्वरीमहं शरणं प्रपद्ये ।।२

यच्छोणपट्टवसनेन विराजमानं जाम्बूनदाभरुचिरं शरीरं पुरारिः ।
निर्वर्ण्य हर्षवशतो नयनत्रयेण तृप्तिं प्रयाति न चिरं किमु वर्ण्यते तत्।।३

माणिक्य-नील-गजमौक्तिकवज्ररत्नैः संयुक्तकाञ्चनमयानि च भूषणानि।
आश्रित्य तत्तनुलतां विफलीभवन्ति भूष्यत्वमेव निजमत्र हि सूचयन्ति।४

नारायणी सुरनरार्चितपादपीठा स्मेरानना कलुषचित्तजने दविष्ठा ।
दुःखानलप्रशमनाय सदा वरिष्ठा स्विष्टानि मे दिशतु सा सततं सुहृष्टा।५

ऊर्ध्वेन हस्तयुगलेन हि धारयन्ती खड्गञ्च खर्परमथो दितिजान्निहन्तुम्।
नीचैस्तथाभयमपीष्टमतिप्रसन्ना धत्ते प्रपन्नजनतापविनाशनार्थम् ।।६

यस्याः कटाक्षविकरालमुखं निरीक्ष्य दूरं द्रवन्ति दनुजाः पतितोत्थिताश्च।
तद्ध्येव भक्तगणमानसमोदहेतुः सौम्याननं स्वनुग्रहाञ्चितनेत्रशोभि ।।७

वैसारच्छागलपलैरभिनन्द्यमाने भक्तिप्रियेऽनवरतं भविकं ददाने ।
देवद्विषां भयदतीक्ष्णमसिं दधाने का वा तुला भवतु वां करुणानिधाने ।।८

नेत्रद्वयेन परिदृश्यत एव रूपं पद्भ्यां गतिः करयुगेन च तुल्यकर्म ।
शब्दग्रहः श्रवणयुग्मवशाद्यथा स्यान्मूर्तिद्वयी जननि तेऽत्र तथैव मन्ये।९

रोगान्निवारयतमिन्दुकलावतंसे दैन्यं प्रणाशयतमाशु गिरीशकान्ते ।
दत्तं सुतं गुणयुतं गिरिराजकन्ये भक्तिञ्चपादसरसीरुहयोः सदा वाम्।१०

लक्ष्मीधरेण रचितां स्तुतिमादरेणाजस्रं पठेद्यदि जनो ह्युपलेश्वरी द्राक्।
नारायणी च सततं भवतः प्रसन्ने तस्मिंस्ततः स लभते निजमीप्सितं यत् ।११

—*—

## श्रीलक्ष्मीधरद्विवेदिना प्राकाशितानि पुस्तकानि

१. संस्कृतं हि भारतस्य राष्ट्रभाषा
२. कवितावितानम्
३. दशग्रीववधः (१म सर्गः) – बालबोधिनीटीका
४. बालबोधः (प्रथमसंस्कृतशिक्षार्थिनां कृते नितरामुपयोगी)
५. सङ्गीतकलिका (ओडिआ)
६. समलेश्वरी भजनमला (ओडिआ)
७. श्रीकृष्णस्तोत्रम्
८. शारलास्तोत्रम् (उत्कललिपिमयम्)
९. विमलानन्दोपनिषद्
१०. जगन्नाथस्तुतिमञ्जरी (उत्कललिपिमयी)
११. शिवभजनमाला (ओडिआ)

मनसा यत्स्मरेत् स्तोत्रं वचसा यं मनुं स्मरेत् ।
उभयं निष्फलं याति भिन्नभाण्डोदकं यथा ।।
(अतः स्तोत्राणि उच्चैः पठितव्यानि । मन्त्रांस्तु मनसैव जपेत् ।)

—o—




नायमात्मा बलहीनेन लभ्यो
न च प्रमादात्तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वां-
स्तस्यैष आत्मा विशते ब्रह्मधाम ।।

(मुण्डक ३/२/४)

दुर्बल व्यक्ति इस आत्माको नहीं लाभ कर सकता है। अनवधानतासे वा लिङ्ग (सन्न्यास) विहीन तपस्यासे भी नहीं। जो विद्वान् इन उपायोंसे प्रयत्न करता है, उसका आत्मा ब्रह्मधाम में प्रवेश करता है ।